अथ धनुर्वेदः

ईश्वरोक्ताद्धनुर्वेदाद्व्यासस्यापि सुभाषितात्
पदान्याकृष्य रचितो ग्रन्थः संक्षेपतो मया १
विना शार्ङ्गधरं नान्यो धनुर्वेदार्थतत्त्ववित्
यतः स्वप्ने निशि प्राप्ता धनुर्वेदार्थतत्त्ववित्
यतः स्वप्ने निशि प्राप्ता शिवात्तत्त्वविचारणा २
अतः संदेहदोलायां रोपणीयं न मानसम्
ग्रन्थेस्मिंश्चापचतुरैर्वीरचिन्तामणौ क्वचित् ३
यस्याभ्यासप्रसादेन निष्पद्यन्ते धनुर्धराः
जेतारः परसैन्यानां तस्याभ्यासो विधीयताम् ४
एकोऽपि यत्र नगरे प्रसिद्धः स्याद्धनुर्धरः
ततो यान्त्यरयो दूरं मृगाः सिंहगृहादिव ५

अथ धनुर्धारणविधिः

आचार्येण धनुर्देयं ब्राह्मणे सुपरीक्षिते
लुब्धे धूर्ते कृतघ्ने च मन्दबुद्धौ न दीयते ६
ब्राह्मणाय धनुर्देयं खड्गं वै क्षत्रियाय च
वैश्याय दापयेत्कुन्तं गदां शूद्रस्य दापयेत् ७
धनुश्चक्रं च कुन्तं च खड्गं च च्छुरिका गदा
सप्तमं बाहुयुद्धं स्यादेवं युद्धानि सप्तधा ८
आचार्यः सप्तयुद्धः स्याच्चतुर्युद्धस्तु भार्गवः
द्वाभ्यां चैव भवेद्योध एकेन गणको भवेत् ९
हस्तः पुनर्वसुः पुष्यो रोहिणी चोत्तरात्रयम्
अनुराधाश्विनी चैव रेवती दशमी तथा १०
जन्मस्थे च तृतीये च षष्ठे वै सप्तमे तथा
दशमैकादशे चन्द्रेसर्वकर्माणि कारयेत् ११
तृतीया पञ्चमी चैव सप्तमी दशमी तथा

त्रयोदशी द्वादशी च तिथयस्तु शुभा मताः १२
सूर्यवारः शुक्रवारो गुरुवारस्तथैव च
एतद्वारत्रयं धन्यं प्रारम्भे शस्त्रकर्मणाम् १३
एभिर्दिनैस्तु शिष्याय गुरुः शस्त्राणि दापयेत्
संतर्प्य दानहोमाभ्यां सुरान्वेदविधानतः १४
ब्राह्मणान्भोजयेत्तत्र कुमारीश्चाप्यनेकशः
तापसानर्चयेद्भक्त्या ये चान्ये शिवयोगिनः १५
अन्नपानादिभिश्चैव वस्त्रालंकारभूषणैः
गन्धमाल्यैर्विचित्रैश्च गुरुं तत्र प्रपूजयेत् १६
कृतोपवासः शिष्यस्तु मृगाजिनपरिग्रहः
बद्धाञ्जलिपुटस्तत्रयाचयेद्गुरुतो धनुः १७
अङ्गन्यासस्ततः कार्यः शिवोक्तः सिद्धिमिच्छता
आचार्येण च शिष्यस्य पापघ्नो विघ्ननाशनः १८
शिखास्थाने न्यसेदीशं बाहुयुग्मे च केशवम्
ब्रह्माणं नाभिकूपे तु जङ्घयोश्च गणाधिपम् १९
ॐ हों शिखास्थाने शंकराय नमः
ॐ हों बाह्वोः केशवाय नमः
ॐ हों नाभिमध्ये ब्रह्मणे नमः
ॐ हों जङ्घयोर्गणपतये नमः
ईदृशं कारयेन्न्यासं येन श्रेयो भविष्यति
अन्येऽपि दुष्टमन्त्रेण न हिंसन्ति कदाचन २०
शिष्याय मानुषं चापं धनुर्मन्त्राभिमन्त्रितम्
काण्डात्काण्डाभिमन्त्रेण दद्याद्वेदविधानतः २१
प्रथमं पुष्पवेधं च फलहीनेन पत्रिणा
ततः फलयुतेनैव मत्स्यवेधं च कारयेत् २२
मांसवेधं ततः कुर्यादेवं वेधो भवेत्रिधा

एतैर्वेधैः कृतैः पुंसां शराः स्युः सर्वसाधकाः २३
वेधने चैव मांसस्य शरपातो यदा भवेत्
पूर्वदिग्भागमाश्रित्य तदा स्याद्विजयी सुखी २४
दक्षिणे कलहो घोरो विदेशगमनं पुनः
पश्चिमे धनधान्यं च सर्वं चैवोत्तरे शुभम् २५
ऐशान्यां पतनं दुष्टं विदिशोऽन्याश्च शोभनाः
हर्षपुष्टिकराश्चैव सिद्धिदाः शस्त्रकर्मणि २६
एवं वेधत्रयं कुर्याच्छङ्खदुन्दुभिनिः स्वनैः
ततः प्रणम्य गुरवे धनुर्बाणान्निवेदयेत् २७

अथ चापप्रमाणम्

प्रथमं यौगिकं चापं युद्धचापं द्वितीयकम्
निजबाहुबलान्मानात्किंचिदूनं शुभं धनुः २८
वरं प्राणाधिको धन्वी न तु प्राणाधिकं धनुः
धनुषा पीडयमानस्तु धन्वी लक्ष्यं न पश्यति २९
अतो निवबलोन्मानं चापं स्याच्छुभकारकम्
देवानामुत्तमं चापं ततो न्यूनं च मानवम् ३०
अर्धपञ्चमहस्तं तु श्रेष्ठं चापं प्रकीर्तितम्
तद्विज्ञेयं धनुर्दिव्यं शंकरेण धृतं पुरा ३१
तस्मात्परशुरामेण ततो द्रोणेन धारितम्
द्रोणाद्गृहीतं पार्थेन ततः सात्यकिना धृतम् ३२
कृते युगे महादेवस्त्रेतायां चापि राघवः
द्वापरे द्रोणविप्रश्च दैवं चापमधारयत् ३३
चतुर्विंशाङ्गुलो हस्तश्चतुर्हस्तं धनुः स्मृतम्
तद्भवेन्मानवं चापं सर्वलक्षणसंयुतम् ३४
त्रिपर्व पञ्चपर्व च सप्तपर्व प्रकीर्तितम्
नवपर्व च कोदण्डं चतुर्धा शुभकारकम् ३५

चतुःपर्व च षट्पर्व अ्रष्टपर्व विवर्जयेत्
केषांचिच्च भवेच्चापं वितस्तिनवसंमितम्  ३६
अ्रतिजीर्णमपक्वं च ज्ञातिधृष्टं तथैव च
दग्धं छिद्रं न कर्तव्यं बाह्याभ्यन्तरहस्तकम्  ३७
गुणहीनं गुणाक्रान्तं काण्डदोषसमन्वितम्
गलग्रन्थि न कर्तव्यं तलमध्ये तथैव च  ३८
अ्रपक्वं भङ्गमायाति अ्रतिजीर्णं तु कर्कशम्
जातिधृष्टं तु सोद्वेगं कलहो बान्धवैः सह  ३९
दग्धेन दह्यते वेश्म छिद्रं युद्धविनाशनम्
बाह्यो लक्ष्यं न लभ्येत तथैवाभ्यन्तरेपि वा  ४०
हीने तु संधिते बाणे संग्रामे भङ्गकारकम्
अ्राक्रान्ते तु पुनः क्वापि न लक्ष्यं प्रप्यते दृढम्  ४१
गलग्रन्थि तलग्रन्थि घनहानिकरं धनुः
एभिर्दोषैर्विनिर्मुक्तं सर्वकार्यकरं स्मृतम्  ४२
शार्ङ्ग पुनर्धनुर्दिव्यं विष्णोः परममायुधम्
वितस्तिसप्तसंमानं निर्मितं विश्वकर्मणा  ४३
न च स्वर्गे न पाताले न भूमौ कस्यचित्करे
तद्धनुर्वशमायाति मुक्त्वैकं पुरुषोत्तमम्  ४४
पौरुषेयं तु यच्छार्ङ्ग बहुवत्सरशोषितम्
वितस्तिभिः सार्धषड्भिर्मितं सर्वार्थसाधनम्  ४५
प्रयो योगयं धनुः शार्ङ्ग गजारोहाश्वसादिनाम्
रथिनां च पदातीनां वांशं चापं प्रकीर्तितम्  ४६

अ्रथ गुणलक्षणानि

गुणानां लक्षणं वक्ष्ये यादृशं कारयेद्गुणम्
पट्टसूत्रो गुणः कार्यः कनिष्ठामानसंमितः  ४७
धनुःप्रमाणो निःसन्धिः शुद्धैस्त्रिगुणतन्तुभिः

वर्तितः स्याद्गुणः श्लक्ष्णः सर्वकर्मसहो युधि ४८
अभावे पट्टसूत्रस्य हारिणी स्नायुरिष्यते
गुणार्थमथवा ग्राह्याः स्नायवो महिषीगवाम् ४९
तत्कालहतगोकर्णचर्मणा छागलेन वा
निर्लोम्ना तन्तुरूपेण कुर्याद्वा गुणमुत्तमम् ५०
पक्ववंशत्वचा कार्यो गुणस्तु स्थावरो दृढः
पट्टसूत्रेण संनद्धः सर्वकर्मसहो युधि ५१
प्राप्ते भाद्रपदे मासि त्वगर्कस्य प्रशस्यते
तस्यास्तत्र गुणः कार्यः पवित्रः स्थावरो दृढः ५२
वृत्तार्कसूत्रतन्तूनां हस्तास्त्वष्टादश स्मृताः
सद्वृत्तं त्रिगुणं कार्यं प्रमाणोऽयं गुणे स्मृतः ५३

अथ शरलक्षणानि

अतः परं प्रवक्ष्यामि शराणां लक्षणं शुभम्
स्थूलं न चातिसूक्ष्मं च न पक्वं न कुभूमिजम्
हीनग्रन्थिविदीर्णं च वर्जयेदीदृशं शरम् ५४
पूर्णग्रन्थि सुपक्वं च पाण्डुरं समयाहृतम्
कठिनं वर्तुलं काण्डं गृह्णीयात्सुप्रदेशजम् ५५
द्वौ हस्तौ मुष्टिहीनौ तु दैर्घ्ये स्थौल्ये कनिष्ठिका
विधेया शरमानेषु यन्त्रेष्वाकर्षयेत्ततः ५६
कङ्कहंसशशादानां मत्स्यादक्रौञ्चकेकिनाम्
गृध्राणां कुक्कुटानां च पक्षा एतेषु शोभनाः ५७
एकैकस्य शरस्यैव चतुष्पक्षाणि योजयेत्
षडङ्गुलप्रमाणेन पक्षच्छेदं च कारयेत् ५८
दशाङ्गुलमिताः पक्षाः शार्ङ्गचापस्य मार्गणे
योज्या दृढाश्चतुःसंख्याः संनद्धाः स्नायुतन्तुभिः ५९
शराश्च त्रिविधा ज्ञेयाः स्त्री पुमांश्च नपुंसकः

अग्रे स्थूलो भवेन्नारी पश्चात्स्थूलो भवेत्पुमान् ६०
समं नपुंसकं ज्ञेयं तल्लक्ष्यार्थं प्रशस्यते
दूरापातं युवत्या च पुरुषो भेदयेद्दृढम् ६१
अथ फललक्षणानि
फलं तु शुद्धलोहस्य सुधारं तीक्ष्णमक्षतम्
योजयेद्वज्रलेपेन शरे पक्षानुमानतः ६२
आरामुखं क्षुरप्रं च गोपुच्छं चार्धचन्द्रकम्
सूचिमुखं च भल्लं च वत्सदन्तं द्विभल्लकम् ६३
कर्णिकं काकतुण्डं च तथान्यान्यप्यनेकशः
फलानि देशभेदेषु भवन्ति बहुरूपतः ६४
आरामुखेन वै चर्म क्षुरप्रेण च कार्मुकम्
सुचीमुखेन कवचमर्धचन्द्रेण मस्तकम् ६५
भल्लेन ह्रदयं वेध्यं द्विभल्लेन गुणः शरः
लोहं च काकतुण्डेन लक्ष्यं गोपुच्छकेन च ६६
अन्यद्गोपुच्छकं ज्ञेयं शुद्धकाष्ठविनिर्मितम्
मुखे च लोहकण्टेन वेध्यं त्र्यङ्गुलसंमितम् ६७
अथ फलपायनम्
फलस्य पायनं वक्ष्ये दिव्यौषधिविलेपनैः
येन दुर्भेद्यवर्माणि भेदयेत्तरुपर्णवत् ६८
पिप्पली सैन्धवं कुष्ठं गोमूत्रेण तु पेषयेत्
अनेन लेपयेच्छस्त्रं लिप्तं चाग्नौ प्रतापयेत् ६९
अविशीतमनाविद्धं पीतनष्टं तथौषधम्
ततो निर्वापितं तैले लोहं तत्र विशिष्यते ७०
पञ्चभिर्लवणैः पिष्टैर्मधुसिक्तैः ससर्षपैः
एभिः प्रलेपयेच्छस्त्रं लिप्तं चाग्नौ प्रतापयेत् ७१
शिखिग्रीवानुवर्णाभं तप्तपीतं तथौषधम्

ततस्तु विमलं तोयं पाययेच्छस्त्रमुत्तमम् ७२

अथ नाराचनालीकौ

सर्वलोहास्तु ये बाणा नाराचास्ते प्रकीर्तिताः
पञ्चभिः पृथुलैः पक्षैर्युक्ताः सिद्ध्यन्ति कस्यचित् ७३
नालीका लघवो बाणा तलयन्त्रेण चोदिताः
अत्युच्चदूरपातेषु दुर्गयुद्धेषु ते मताः ७४
अथ स्थानमुष्ट्याकर्षणलक्षणानि
स्थानान्यष्टौ विधेयानि योजने भिन्नकर्मणाम्
मुष्टयः पञ्च समाख्याता व्यायाः पञ्च प्रकीर्तिता ७५
अग्रेता वामपादं च दक्षिणं जानु कुञ्चितम्
आलीढं तु प्रकर्तव्यं हस्तद्वयसविस्तरम् ७६
प्रत्यालीढं तु कर्तव्यं सव्यं चेवानुकुञ्चितम्
दक्षिणं च पुरस्तद्वद्दूरपाते विशिष्यते ७७
पादौ सुविस्तरौ कार्यौ समौ हस्तप्रमाणतः
विशाखस्थानकं ज्ञेयं कूटलक्ष्यस्य वेधने ७८
समपादे समौ पादौ निष्कम्पौ च सुसंगतौ
असमे च पुरो वामो हस्तमात्रे नतं वपुः ७९
आकुञ्चितोरू द्वौ यत्र जानुभ्यां धरणिं गतौ
दर्दुरक्रममित्याहुः स्थानकं दृढभेदने ८०
सव्यं जानु गतं भूमौ दक्षिणं च सकुञ्चितम्
अग्रतो यत्र वातव्यं तं विद्याद्गरुडक्रमम् ८१
पद्मासनं प्रसिद्धं तु उपविश्य यथाक्रमम्
धन्विनां तत्तु विज्ञेयं स्थानकं शुभलक्षणम् ८२

अथ गुणमुष्टयः

पताका वज्रमुष्टिश्च सिंहकर्णी तथैव च
मत्सरी काकतुण्डी च योजनीया यथाक्रमम् ८३

दीर्घा तु तर्जनी यत्र आश्रिताङ्गुष्ठमूलकम्
पताका सा च विज्ञेया नलिका दूरमोक्षणे ८४
तर्जनी मध्यमामध्यमङ्गुष्ठो विशते यदि
वज्रमुष्टिस्तु सा ज्ञेया स्थूले नाराचमोक्षणे ८५
अङ्गुष्ठनखमूले तु तर्जन्यग्रं सुसंस्थितम्
मत्सरी सा च विज्ञेया चित्रलक्ष्यस्य वेधने ८६
अङ्गुष्ठाग्रे तु तर्जन्या मुखं यत्र निवेशितम्
काकतुण्डी च विज्ञेया सूक्ष्मलक्ष्येषु योजिता ८७

अथ धनुर्मुष्टिसंधानम्

संधानं त्रिविधं प्रोक्तमध ऊर्ध्वं समं तथा
योजयेत्त्रिप्रकारं हि कार्येष्वपि यथाक्रमम् ८८
अधश्च दूरपातित्वं समे लक्ष्यं सुनिश्चितम्
दृढस्फोटं प्रकुर्वीत ऊर्ध्वसंस्थानयोगतः ८९

अथ व्यायाः

कैशिकः केशमूले चेच्छरः शृङ्गे च सात्त्विकः
श्रवणे वत्सकर्णश्च ग्रीवायां भरतो भवेत् ९०
अंसके स्कन्धनामा च व्यायाः पञ्च प्रकीर्तिताः
कैशिकश्चित्रयुद्धेषु अधोलक्ष्येषु सात्त्विकः ९१
वत्सकर्णः स विज्ञेयो भरतो दृढभेदने
दृढभेदे च दूरे च स्कन्धनामानमुद्दिशेत् ९२

अथ लक्ष्यम्

लक्ष्यं चतुर्विधं ज्ञेयं स्थिरं चैव चलं तथा
वेधयेत्त्रिप्रकारं तु स्थिरवेधी सु उच्यते ९३
आत्मानं सुस्थिरं कृत्वा लक्ष्यं चैव स्थिरं बुधः
वेधयेत्त्रिप्रकारं तु स्थिरवेधी स उच्यते ९४
चलं तु वेधयेद्यस्तु आत्मना स्थिरसंस्थितः

चललक्ष्यं तु तत्प्रोक्तमाचार्येण सुधीमता ९५
धन्वी तु चलते यत्र स्थिरलक्ष्ये समाहितः
चलाचलं भवेत्तत्र अप्रमेयमनिन्दितम् ९६
उभावेव चलौ यत्र लक्ष्यं चापि धनुर्धरः
तद्विज्ञेयं द्वयचलं श्रमेणैव हि साध्यते ९७
श्रमेणास्खलितं लक्ष्यं दूरं च बहुभेदनम्
श्रमेण कठिना मुष्टिः शीघ्रसंधानमाप्यते ९८
श्रमेण चित्रयोधित्वं श्रमेण प्राप्यते जयः
तस्माद्गुरुसमक्षं हि श्रमः कार्यो विजानता ९९
प्रथमं वामहस्तेन यः श्रमं कुरुते नरः
तस्य चापक्रियासिद्धिरचिरादेव जायते १००
वामहस्ते तु संसिद्धे पश्चाद्दक्षिणमारभेत्
उभाभ्यां च श्रमं कुर्यान्नाराचैश्च शरैस्तथा १०१
वामेनैव श्रमं कुर्यात्सुसिद्धे दक्षिणे करे
विशाखेनासमेनैव तथा व्याये च कैशिके १०२
उदिते भास्करे लक्ष्यं पश्चिमायां निवेशयेत्
अपराह्णे च कर्तव्यं लक्ष्यं पूर्वदिगाश्रितम् १०३
उत्तरेण सदा कार्यं प्राणस्य न विरोधकम्
संग्रामेण विना कार्यं न लक्ष्यं दक्षिणामुखम् १०४
षष्टिधन्वन्तरे लक्ष्यं ज्येष्ठलक्ष्यं प्रकीर्तितम्
चत्वारिंशन्मध्यमं च विंशतिश्च कनिष्ठकम् १०५
शराणां कथितं ह्येतन्नाराचानामथोच्यते
चत्वारिंशच्च त्रिंशच्च षोडशैव भवेत्ततः १०६
चतुःशतैश्च काण्डानां यो हि लक्ष्यं विसर्जयेत्
सूर्योदये चास्तमये स ज्येष्ठो धन्विनां भवेत् १०७
त्रिशतैर्मध्यमश्चैव द्विशताभ्यां कनिष्ठकः

लक्ष्यं च पुरुषोन्मानं कुर्याच्चन्द्रकसंयुतम्  १०८
ऊर्ध्ववेदी भवेज्ज्येष्ठो नाभिवेधी च मध्यमः
यः पादवेधी लक्ष्यस्य स कनिष्ठो मतो मया  १०९
अथानध्यायः
अष्टमी च अमावास्या वर्जनीया चतुर्दशी
पूर्णिमार्धदिनं यावन्निषिद्धा सर्वकर्मसु  ११०
अकाले गर्जिने देवे दुर्दिनं वाथवा भवेत्
पूर्वकाण्डहतं लक्ष्यमनध्यायं प्रचक्षते  १११
श्रमं च कुर्वतस्तत्र भुजंगो यदि दृश्यते
अथवा भज्यते चापं यदैव श्रमकर्मणि  ११२
त्रुटयते वा गुणो यत्र प्रथमे बाणमोक्षणे
श्रमं तत्र न कुर्वीत शस्त्रे मतिमतां वरः  ११३
अथ श्रमक्रिया
क्रियाकलापान्वक्ष्यामि श्रमसाध्याञ्शुचिष्मताम्
येषां विज्ञानमात्रेण सिद्धिर्भवति नान्यथा  ११४
प्रथमं चापमारोप्य चूलिकां बन्धयेत्ततः
स्थानकं तु ततः कृत्वा बाणोपरि करं न्यसेत्  ११५
तुलनं धनुषश्चैव कर्तव्यं वामपाणिना
आदानं च ततः कृत्वा संधानं च ततः परम्  ११६
सकृदाकृष्टचापेन भूमिवेधं तु कारयेत्
नमस्कुर्याच्छिवं विघ्नराजं गुरुधनुःशरान्  ११७
याचितव्या गुरोराज्ञा बाणस्याकर्षणं प्रति
प्राणवायुं प्रयत्नेन बाणेन सह पूरयेत्  ११८
कुम्भकेन स्थिरं कृत्वा हुंकारेण विसर्जयेत्
इत्यभ्यासक्रिया कार्या धन्विना सिद्धिमिच्छता  ११९
षण्मासात्सिद्ध्यते मुष्टिः शराः संवत्सरेण तु

नाराचास्तस्य सिद्धयन्ति यस्य तुष्टो महेश्वरः १२०
पुष्पवद्धारयेद्बाणं सर्पवत्पीडयेद्धनुः
धनवच्चिन्तयेल्लक्ष्यं यदीच्छेत्सिद्धिमात्मनः १२१
क्रियामिच्छन्ति आचार्या दूरमिच्छन्ति भार्गवाः
राजानो दृष्टिमिच्छन्ति लक्ष्यमिच्छन्ति चेतरे १२२
जनानां रञ्जनं येन लक्ष्यघातात्प्रजायते
हीनेनापीषुणा तस्मात्प्रशस्तं लक्ष्यवेधनम् १२३
विशाखस्थानके स्थित्वा समसंधानमाचरेत्
गोपुच्छमुखबाणेन सिंहकर्ण्या च मुष्टिना १२४
आकर्षेत्कैशिकव्याये न शिखां चालयेत्ततः
पूर्वापरौ समौ कार्यौ समांसौ निश्चलौ करौ १२५
चक्षुषी स्पन्दयेन्नैव दृष्टिं लक्ष्ये नियोजयेत्
मुष्टिनाच्छादितं लक्ष्यं शरस्याग्रे नियोजयेत् १२६
मनो दृष्टिगतं ज्ञात्वा ततः काण्डं विसर्जयेत्
स्खलत्येवं कदाचिन्न लक्ष्ये योधो जितश्रमः १२७
आदानं चैव तूणीरात्संधानं कर्षणं तथा
क्षेपणं च त्वरायुक्तो बाणस्य कुरुते तु यः
नित्याभ्यासवशात्तस्य शीघ्रसंधानता भवेत् १२८
प्रत्यालीढे कृते स्थाने अधःसंधानमाचरेत्
मुष्ट्या पताकया बाणं स्त्रीचिह्नं दूरपातनम् १२९
दर्दुरक्रममास्थाय ऊर्ध्वसंधानमाचरेत्
स्कन्धव्यायेन वज्रस्य मुष्ट्या पुंमार्गणेन च
अत्यन्तसौष्ठवाद्बाह्वोर्जायते दृढवेधिता १३०
सूचीमुखा मीनपुच्छा भ्रमरी च तृतीयका
शराणां गतयस्तिस्रः प्रशस्ताः कथिता बुधैः १३१
सूचीमुखगतिस्तस्य सायकस्य प्रजायते

पत्रं विलोमितं यस्य अथवा हीनपत्रकम्  १३२
कर्कशेन तु चापेन यः कृष्टो हीनमुष्टिना
मत्स्यपुच्छा गतिस्तस्य सायकस्य प्रकीर्तिता  १३३
भ्रमरी कथिता ह्येषा विद्वद्भिः श्रमकर्मणि
ऋजुत्वेन विना याति क्षेप्यमाणस्तु सायकः  १३४
वामगा दक्षगा चैव ऊर्ध्वगाधोगमा तथा
चतस्रो गतयः प्रोक्ता बाणस्खलनहेतवः  १३५
कम्पते गुणमुष्टिस्तु मार्गणस्य हि पृष्ठतः
संमुखी स्याद्धनुर्मुष्ठिस्तदा वामे गतिर्भवेत्  १३६
ग्रहणं शिथिलं यस्य ऋजुत्वेन विसर्जितम्
पार्श्वं तु दक्षिणं याति सायकस्य न संशयः  १३७
ऊर्ध्वं याति चापमुष्टिर्गुणमुष्टिरधो भवेत्
स मुक्तो मागणो लक्ष्याद्दूरं याति न संशयः  १३८
मोक्षणे चैव बाणस्य चापमुष्टिरधो भवेत्
गुणमुष्टिर्भवेदूर्ध्वं तदाधोगामिनी गतिः  १३९
लक्ष्यबाणाग्रदृष्टीनां संगतिस्तु यदा भवेत्
तदानीमुज्झितो बाणो लक्ष्यान्न स्खलति ध्रुवम्  १४०
निर्दोषः शब्दहीनश्च सममुष्टिद्वयोज्झितः
भिनत्ति दृढवेध्यानि सायको नास्ति संशयः  १४१
स्वाकृष्टस्तेजितो यश्च सुशुद्धो गाढमुक्तितः
नरनागाश्वकायेषु न स तिष्ठति मार्गणः  १४२
यस्य तृणसमा बाणा यस्येन्धनसमं धनुः
यस्य प्राणसमा मौर्वी स धन्वी धन्विनां वरः  १४३
अयश्चर्म घतश्चैव मृत्पिण्डं च चतुष्टयम्
यो भिनत्ति हि तस्येषुर्वज्रेणापि न धारय्ते  १४४
सार्धाङ्गुलप्रमाणेन लोहपात्राणि कारयेत्

तानि भित्त्वैकबाणेन दृढघाती भवेन्नरः १४५
चतुर्विंशतिचर्माणि भिनत्त्येकेषुणा नरः
तस्य बाणो गजेन्द्रस्य कायं निर्भिद्य गच्छति १४६
भ्राम्यञ्जले घटो वेद्धयश्चक्रे मृत्पिण्डकं तथा
भ्रमन्तं वेधयेद्यस्तु दृढभेदी स उच्यते १४७
अयस्तु काकतुण्डेन चर्म आरामुखेन हि
मृत्पिण्डं च घटं चैव विध्येत्सूचिमुखेन हि १४८
बाणभङ्गं करावर्तं काष्ठच्छेदनमेव च
बिन्दुकं गोलकयुगं यो वेत्ति स जयी भवेत् १४९
लक्ष्यस्थाने धृतं काण्डं ससुखं छेदयेत्ततः
किंचिन्मुष्टिं विधाय स्वां तिर्यग्विफलिकेषुणा १५०
संमुखं वा समायान्तं तिर्यक्छायं तमम्बरे
शरं शरेण यश्छिन्द्याद्बाणच्छेदी स जायते १५१
काष्ठेऽश्वकेशं संयम्य तत्र बद्ध्वा वराटिकाम्
हस्तेन भ्राम्यमाणां च यो हन्ति स धनुर्धरः १५२
लक्ष्यस्थाने न्यसेत्काष्ठं सार्द्रं गोपुच्छसंनिभम्
यश्छिन्द्यात्तं क्षुरप्रेण काष्ठच्छेत्ता स जायते १५३
लक्ष्ये बिन्दुं न्यसेच्छुभ्रं शुभ्रबन्धूकपुष्पवत्
हन्ति तं बिन्दुकं यस्तु चित्रयोधी स जायते १५४
काष्ठगोलयुगं क्षिप्तं दूरमूर्ध्वपुरःस्थितिः
अप्राप्तधारं पृष्ठेन गच्छेत्पुच्छमुखेन हि १५५
यो हन्ति शरयुग्मेन शीघ्रसंधानयोगतः
स स्याद्धनुर्भृतां श्रेष्ठः पूजितः सर्वपार्थिवैः १५६
रथस्थेन गजस्थेन हयस्थेन च पत्तिना
धावता वै श्रमः कार्यो लक्ष्यं हन्तुं सुनिश्चितम् १५७
लक्ष्यस्थाने न्यसेत्कांस्यपात्रं हस्तद्वयान्तरे

ताडयेच्छर्कराभिस्तच्छब्दः संजायते यथा १५८
यत्रैवोत्पद्यते शब्दस्तं सम्यक्तत्र चिन्तये
कर्णेन्द्रियमनोयोगाल्लक्ष्यंनिश्चयतां नयेत् १५९
पुनः शर्करया तच्च ताडयेच्छब्दहेतवे
पुनर्निश्चयतां नेयं शब्दस्थानानुसारतः १६०
ततः किंचित्कृतं दूरे नित्यं नित्यं विधानतः
लक्ष्यं समभ्यसेद्ध्वान्ते शब्दव्यधनहेतवे १६१
ततोऽत्र बाणेन हन्यात्तदवधानेन तीक्ष्णधीः
एतच्च दुष्करं कर्म भाग्यैः कस्यापि सिद्ध्यति १६२
एवं श्रमविधिं कुर्याद्यावत्सिद्धिः प्रजायते
श्रमे सिद्धे च वर्षासु नैव ग्राह्यं धनुः करे १६३
पूर्वाभ्यासस्य शस्त्राणामविस्मरणहेतवे
मासद्वयं श्रमं कुर्यात्प्रतिवर्षं शरदृतौ १६४
जाते वाश्वयुजे मासि नकमीदेवतादिने
पूजयेदीश्वरं चण्डीं गुरुं शस्त्राणि वाजिनः १६५
विप्रेभ्यो दक्षिणां दत्त्वा कुमारी भोजयेत्ततः
देव्यै पशुवलिं दत्त्वा हृष्टो वादित्रमङ्गलैः १६६
ततस्तु साधयेन्मन्त्रान्वेदोक्तांश्चागमोदितान्
अस्त्राणां कर्मसिद्ध्यर्थं जपहोमविधानतः १६७
ब्राह्मं नारायणं शैवमैन्द्रं वायव्यवारुणे
आग्नेयं चापरास्त्राणि गुरुदत्तानि साधयेत् १६८
मनोवाक्कर्मभिर्भाव्यं लब्धास्त्रेण शुचिष्मता
अपात्रमसमर्थं च घ्नत्यस्त्राणि कुपूरुषम् १६९
प्रयोगं चोपसंहारं यो वेत्ति स धनुर्धरः
सामान्ये कर्मणि प्राज्ञो नैवास्त्राणि प्रयोजयेत् १७०
हस्तार्के लाङ्गलीकन्दं गृहित्वा तस्य लेपतः

शूरस्यापि रणे पुंसो दर्पं हरति सत्वरः १७१
गृहीतं योगनक्षत्रैरपामार्गस्य मूलकम्
लेपमात्रेण वीराणां सर्वशस्त्रनिवारणम् १७२
अधःपुस्पी शङ्खपुष्पी लज्जालुर्गिरिकर्णिका
नीलिनी सहदेवा च पुत्रमार्जारिका तथा १७३
विष्णुक्रान्ता च सर्वासां जटा ग्राह्या रवेर्दिने
बद्धा भुजे विलेपाद्वा काये शस्त्रौघवारिका १७४
सर्पव्याघ्रादिसत्त्वानां भूतादीनां न जायते
भितिस्तस्य स्थिता यस्य मातरोऽष्टौ शरीरके १७५
गृहीतं हस्तनक्षत्रे चूर्णं छुच्छुन्दरीभवम्
तत्प्रभावाद्गजः पुंसः संमुखो नैति निश्चितम् १७६
छुच्छुन्दरी श्रीफलपुष्पचूर्णैरालिप्तगात्रस्य नरस्य दूरात्
आघ्राय गन्धं द्विरदोऽतिमत्तो मदं त्यजेत्केसरिणो यथोग्रम् १७७
श्वेताद्रिकर्णिकामूलं पाणिस्थं वारयेद्गजम्
श्वेतकण्टारिकामूलं व्याघ्रादीनां भयं हरेत् १७८
पुष्यार्कोत्पाटिते मूले पाठाया मुखसंस्थिते
देहे स्फुटति नो तीक्ष्णं मण्डलाग्रं रणे नृणाम् १७९
गन्धार्या उत्तरं मूलं मुखस्थं संमुखागतम्
शस्त्रौघं वारयत्येव पुष्यार्के विधिना धृतम् १८०
शुभ्रायाः शरपुङ्खाया जटानीलीजटाथवा
भुजे शिरसि वक्त्रे वा स्थिता शस्त्रनिवारिका
भूपाहिचौरभीतिघ्नी गृहीता पुष्यभास्करे १८१
प्रथमं क्रियते स्नानं शुक्लवस्त्रावृतो भवेत्
मङ्गल्यगीतसंयुक्तो देवविप्रांश्च पूजयेत् १८२
क्षेत्रपालस्य नाम्ना च बलिं दद्याद्दिशो दश
शस्त्राणि चापि संपूज्य रक्षामन्त्रं स्मरेत्ततः १८३

ॐ शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके
घण्टास्वनेन नः पाहि चापज्यानिःस्वनेन च १८४
प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे
भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि १८५
सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ते
यानि चात्यन्तघोराणि तै रक्षास्मांस्तथा भुवम् १८६
खड्गशूलगदादीनि यानि चास्त्राणि तेऽम्बिके
करपल्लवसङ्गीनि तैरस्मान् रक्ष सर्वतः १८७
दिव्यौषधीनां लेपं च रक्षाबन्धं च कारयेत्
किंचिद्भुक्त्वा च पीत्वा च ततः संनाहमाचरेत् १८८
सेनापतिं गजारोहानन्यांश्च सुभटांस्तथा
मुख्यानन्यानपि धनैर्वस्त्रैश्च परितोषयेत् १८९
पूर्वं सारथिमारोप्य रथे सज्जेत्ततः स्वयम्
योजयेद्वाजिनः शुद्धान्सुसंतुष्टाञ्जितश्रमान् १९०
रथे च धारयेद्भद्रं कार्मुकाणां चतुष्टयम्
चतुःशतानि बाणानां तूणीरे च प्रयोजयेत् १९१
खड्गं चर्म गदां शक्तिं परिघं मुद्गरं तथा
नाराचं परशुं कुन्तं पट्टिशादींश्च धारयेत् १९२
न रथा न गजा यस्य सोऽश्वमेव समारुहेत्
कटिबद्धैकतूणीरः खड्गशक्तिधनुर्युतः १९३
ततोर्जुनस्य नामानि विष्णुस्मरणपूर्वकम्
जपेत्ततः प्रतिष्ठेत चतुरङ्गबलैर्युतः १९४
लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः
येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः १९५
अर्जुनः फाल्गुनः पार्थः किरीटी श्वेतवाहनः
बीभत्सुर्विजयी कृष्णः सव्यसाची धनंजयः १९६

स्वं तथा स्वरवस्विन्दुनेत्रैरक्षौहिणी मता
अक्षौहिण्यां संप्रदिष्टा रथानां वर्मधारिणाम्
संख्या गणिततत्त्वज्ञैः सहस्राण्येकविंशतिः १९७
उपर्यष्टौ शतान्याहुस्तथा भूयश्च सप्ततिः
गजानां तु परीमाणमेतदेव विनिर्दिशेत् १९८
ज्ञेयं लक्षं पदातीनां सहस्राणि तथा नव
शतानि त्रीणि पञ्चाशच्छूराणां शस्त्रधारिणाम् १९९
पञ्चषष्टिसहस्राणि तथाश्वानां शतानि च
दशोत्तराणि षट् प्राहुः संख्यातत्त्वविदो जनाः २००
स्वद्वयं निधिवेदाक्षिचन्द्राक्ष्यग्निहिमांशुभिः
महाक्षौहिणिका प्रोक्ता संख्या गणितकोविदैः २०१
कोटयस्त्रयोदश प्रोक्ता लक्षाणामेकविंशतिः
चतुर्विंशत्सहस्राणि तथा नवशतानि च २०२
महाक्षौहिणिकां प्राहुरिमां तत्त्वविदो जनाः
महाक्षौहिणिकायां तु रथाः कोटिमिताः स्मृताः
सप्तत्रिंशच्च लक्षाणि गीयन्ते तत्त्वव्हेदिभिः २०३
द्वादशैव सहस्राणि चत्वार्येव शतानि च
प्रोक्तानि नवतिस्तद्वदेवमेव मतंगजाः २०४
अश्वाश्चतुष्कोटिमिता लक्षाण्येकादशैव च
सप्तत्रिंशत्सहस्राणि तथा शतचतुष्टयम् २०५
सप्ततिश्चैव संख्याताः प्रोच्यन्ते पत्तयस्ततः
षट्कोटयोऽशीतिलक्षाणि पञ्चाधिकमितानि च २०६
द्विषष्टि च सहस्राणि तथा शतचतुष्टयम्
पञ्चाशदिति संख्याता महाक्षौहिणिका बुधैः २०७
मुखे रथा गजाः पृष्ठे तत्पृष्ठे च पदातयः
पार्श्वयोश्च हयाः कार्या व्यूहस्यायं विधिः स्मृतः २०८

अर्धचन्द्रं च चक्रं च शकटं मकरं तथा
कमलं श्रेणिकां गुल्मं व्यूहानेवं प्रकल्पयेत्  २०९
ये राजपुत्राः सामन्ता आप्ताः सेवकजातयः
तान्सर्वानात्मनः पार्श्वे रक्षायै स्थापयेन्नृपः  २१०
यस्मिन्कुले यः पुरुषः प्रधानः स सर्वयत्नेन हि रक्षणीयः
तस्मिन्विनष्टे किल सारभूते न नाभिभङ्गे ह्यरका वहन्ति  २११
क्षत्रसारभृतं शूरं शस्त्रज्ञमनुराजि चेत्
अपि स्वल्पं श्रिये सैन्यं वृथेयं मुण्डमण्डली  २१२
अपि पञ्चशतं शूरा मृद्नन्ति महतीं चमूम्
अथवा पञ्च षट् सप्त विजयन्तेऽनिवर्तिनः  २१३
धनुःसंगतिसंशुद्धा वाजिनो मुखदुर्बलाः
आकर्णपलिता योधाः संग्रामे जयवादिनः  २१४
परस्परानुरक्ता ये योधाः शार्ङ्गधनुर्धराः
युद्धज्ञास्तुरगारूढास्ते जयन्ति रणे रिपून्  २१५
एकः कापुरुषो दीर्णो दारयेन्महतीं चमूम्
तं दीर्णमनु दीर्यन्ते योधाः शूरतमा अपि  २१६
दुर्निवारतरा चैव प्रभग्ना महती चमूः
अपामिव महावेगत्रस्ता मृगगणा इव  २१७
यस्तु भग्नेषु सनियेषु विद्रुतेषु निवर्तते
पदे पदेऽश्वमेधस्य लभते फलमक्षयम्  २१८
द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः  २१९
यत्र यत्र हतः शूरः शत्रुभिः परिवेष्टितः
अक्षयं लभते लोकं यदि क्लीबं न भाषते  २२०
मूर्छितं नैव विकलं नाशस्त्रं नान्ययोधिनम्
पलायमानं शरणं गतं चैव न हिंसयेत्  २२१

भीरुः पलायमानोऽपि नान्वेष्टव्यो बलीयसा
कदाचिच्छूरतां याति मरणे कृतनिश्चयः  २२२
संभृत्य महतीं सेनां चतुरङ्गां महीपतिः
व्यूहयित्वाग्रतः शूरान्स्थापयेज्जयलिप्सया  २२३
अल्पायां वा महत्यां वा सेनायामिति निश्चयः
हर्षो योधगणस्यैको जयलक्षणमुच्यते  २२४
अन्वेतं वायवो यान्ति पृष्ठे भानुर्वयांसि च
अनुप्लवन्ते मेघाश्च यस्य तस्य रणे जयः  २२५
अपूर्णे नैव मर्तव्यं संपूर्णे नैव जीवति
तस्माद्धैर्यं विधातव्यं हन्तव्या परवाहिनी  २२६
जिते लक्ष्मीर्मृते स्वर्गः कीर्तिश्च धरणीतले
तस्माद्धैर्यं विधातव्यं हन्तव्या परवाहिनी  २२७

एतम् शिवधनुर्वेदस्य भगवतो व्यासस्य च